॥ श्रीअन्नपूर्णाष्टोत्तरशतनामस्तोत्रम् ॥

॥ श्रीगणेशाय नमः ॥

॥ श्रीअन्नपूर्णाविश्वनाथाभ्यां नमः ॥

अस्य श्रीअन्नपूर्णाष्टोत्तरशतनामस्तोत्रमन्त्रस्य
भगवान् श्रीब्रह्मा ऋषिः ।
अनुष्टुप्छन्दः । श्रीअन्नपूर्णेश्वरी देवता ।
स्वधा बीजम् । स्वाहा शक्तिः । ॐ कीलकम् ।
मम सर्वाभीष्टप्रसादसिद्ध्यर्थे पाठे विनियोगः ।
ॐ अन्नपूर्णा शिवा देवी भीमा पुष्टिस्सरस्वती ।
सर्वज्ञा पार्वती दुर्गा शर्वाणी शिववल्लभा ॥ १॥

वेदवेद्या महाविद्या विद्यादात्री विशारदा ।
कुमारी त्रिपुरा बाला लक्ष्मीश्श्रीर्भयहारिणी ॥ २॥

भवानी विष्णुजननी ब्रह्मादिजननी तथा ।
गणेशजननी शक्तिः कुमारजननी शुभा ॥ ३॥

भोगप्रदा भगवती भक्ताभीष्टप्रदायिनी ।
भवरोगहरा भव्या शुभ्रा परममङ्गला ॥ ४॥

भवान्नी चञ्चला गौरी चारुचन्द्रकलाधरा ।
विशालाक्षी विश्वमाता विश्ववन्द्या विलासिनी ॥ ५॥

आर्या कल्याणनिलया रुद्राणी कमलासना ।
शुभप्रदा शुभावर्ता वृत्तपीनपयोधरा ॥ ६॥

अम्बा संहारमथनी मृडानी सर्वमङ्गला ।
विष्णुसंसेविता सिद्धा ब्रह्माणी सुरसेविता ॥ ७॥

परमानन्ददा शान्तिः परमानन्दरूपिणी ।
परमानन्दजननी परानन्दप्रदायिनी ॥ ८॥

परोपकारनिरता परमा भक्तवत्सला ।
पूर्णचन्द्राभवदना पूर्णचन्द्रनिभांशुका ॥ ९॥

शुभलक्षणसम्पन्ना शुभानन्दगुणार्णवा ।
शुभसौभाग्यनिलया शुभदा च रतिप्रिया ॥ १०॥

चण्डिका चण्डमथनी चण्डदर्पनिवारिणी ।
मार्ताण्डनयना साध्वी चन्द्राग्निनयना सती ॥ ११॥

पुण्डरीकहरा पूर्णा पुण्यदा पुण्यरूपिणी ।
मायातीता श्रेष्ठमाया श्रेष्ठधर्मात्मवन्दिता ॥ १२॥

असृष्टिस्सङ्गरहिता सृष्टिहेतुः कपर्दिनी ।
वृषारूढा शूलहस्ता स्थितिसंहारकारिणी ॥ १३॥

मन्दस्मिता स्कन्दमाता शुद्धचित्ता मुनिस्तुता ।
महाभगवती दक्षा दक्षाध्वरविनाशिनी ॥ १४॥

सर्वार्थदात्री सावित्री सदाशिवकुटुम्बिनी ।
नित्यसुन्दरसर्वाङ्गी सच्चिदानन्दलक्षणा ॥ १५॥

नाम्नामष्टोत्तरशतम्बायाः पुण्यकारणम् ।
सर्वसौभाग्यसिद्ध्यर्थं जपनीयं प्रयत्नतः ॥ १६॥

एतानि दिव्यनामानि श्रुत्वा ध्यात्वा निरन्तरम् ।
स्तुत्वा देवीञ्च सततं सर्वान्कामानवाप्नुयात् ॥ १७॥

॥ इति श्रीब्रह्मोत्तरखण्डे आगमप्रख्यातिशिवरहस्ये
श्रीअन्नपूर्णाष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥